


## मासिकी पत्रिका

संस्कृतभाषाप्रचारिणी सभा, चित्तूरु. (आ प्र०) भारतम्

संपुटः ५ | 15 NOVEMBER 1967 | क्रमांकः ११



कार्तिकाङ्कः] शकवर्षः १८८९ [मूल्यम् ४० पैसाः

# विषयसूचिका


| | | |
|---|---|---|
| 1. | सन्ततिविच्छेदो मा भूत | 1 |
| 2. | सम्पादकीयम् | 2 |
| 3. | संस्कृतवाङ्मये वैज्ञानिकविशेषाः | 5 |
| 4. | सुलभपाठमाला – ३२ | 6 |
| 5. | सुभाषितानि | 7 |
| 6. | दक्षिणायनपरीक्षाफलितानि | 9 |
| 7. | उपयुक्तानि केन्द्राणि | 12 |
| 8. | विद्या | 13 |
| 9. | विजयोऽस्मदीयः | 16 |
| 10. | युक्तिबोधः | 17 |
| 11. | मधुरं मधुरम् | 18 |
| 12. | प्रार्थना | 20 |
| 13. | श्रीमालोलसुप्रभातम् | 21 |
| 14. | काव्यम् | 24 |
| 15. | श्रीवत्सबालमन्दिरे श्रीशङ्कराचार्याः | 26 |
| 16. | प्लवङ्गोत्तरायणपरीक्षाः | 27 |
| 17. | मुक्तकानि | 28 |




# सन्तति विच्छेदो माभूत्

सन्ततिविच्छेदो माभू-
त्संततदुःखकरो नृणाम् ॥

कान्तामातृत्वनिकृन्तननिशितकुठारः क्रूरः
भ्रान्तनास्तिकजनमूढस्वान्तकल्पितप्रचारः,
अन्तरुदरसाधनान्तरतन्त्रयोजनभारः ॥ ॥ सं ॥

कन्यादूषणयवनी मान्यविद्वेषणनाळी,
सन्यासिविधवाजनसंगरंगताळी,
वन्यपशुवर्तनानुगुण्याऽपुण्यकारी ॥ ॥ सं ॥

हैन्दवजननिर्मूलनचिन्तनविस्तारितो
बन्धुरविमतप्रवृद्धिपरिकल्पनचारितो,
निन्द्यो दमनेन दाननीत्या भृशं प्रचारितः ॥ ॥ सं ॥

# सम्पादकीयम्

## प्रजातन्तु माव्यवत्सेत्सीः

प्रकर्षेण जायन्ते इति प्रजाः, म्रियन्ते इति मर्त्याः । ततः प्रजानां उत्पत्ति-विनाशौ हि सहजधर्मौ । यज्जन्यं तन्नश्यमिति हि सिद्धांतः । यावन्तः जायन्ते तावन्तः म्रियन्ते एव । अपितु सद्यः केचित, उत्तरक्षणे केचित, वर्षान्ते वर्षान्तरे वा केचिदिति सर्वेपि स्वशरीरं त्यजन्त्येव । जातस्य हि ध्रुवो मृत्युः इति खलु भगवदुक्तिः । एवं स्थितेपि प्रपंचे आहारस्य अपर्याप्तता वर्धते इति जनसंख्यायाः ह्रासनमपेक्षितमिति पाश्चात्याः पौरस्त्याश्च राजनीतिज्ञाः विज्ञानिन अर्थज्ञाश्च वदन्ति । भारतदेशे तु दिने दिने जनसंख्या विवर्धते इति भीतास्ते अस्मान् भीषयन्ति च । एवं क्रमेणैव भारतप्रजाः वर्धते दशसु वर्षेसु एते सार्धशतकोटिमिता भविष्यन्ति । तदा सा संख्या चैनीयसंख्यायाः द्विगुणितायाः अधिका भविष्यति । तदा तेभ्यः आहारलेशोपि न लभेतेति ते वदन्ति । अपि चाधुना मृतसंख्या ह्रासिता सदौषधाहारविहारव्यवस्थयेति, जाता जाता जीवन्त्येवेति, अतः अपेक्षितः प्रजाह्रासः न भवतीति च ते मन्यन्ते ।

यथार्थतो विचारे अस्मिन् वादे न सत्यमस्ति । जायमानाः जनाः सर्वेपि न शतवत्सरान् जीवन्ति । अकालमरणानि न अल्पानि वर्तन्ते । वाहनयन्त्र-बाहुल्यात् प्रतिदिनं यत्रकुत्रापि जनापायः प्रवर्तत एव । रोगाश्च नूतना बहुविधा उद्भूय प्रजा मारयन्त्येव । यद्यपि मसूचिकामहामारिकादिकानि सघमरण-कारणानि निगृहीतानीति गृह्येत तथापि तत्तदुपद्रवैर्जायमानानां मरणानां अन्यूनतैव समुपलभ्यते । इदानीं तु शतवृद्धाः विरला एव दृश्यन्ते । एतेन किं ज्ञायते ? बहुला जना अन्तरान्तरैव म्रियन्ते इति ।

अस्तु वा अधिकोत्पत्तिरल्पमरणं च । तथापि तदनुगुणवस्तूत्पादनप्रयत्नः

केवलं विधेयः, न जननह्रासः । एवंरीत्यैव दशवर्षपर्यन्तं च जननानि भवेयुः मरणानि च अनधिकानि भवेयुरित्यत्र किं प्रमाणम् ? युद्धमेघावृते प्रपंचे अणुविस्फोटलक्ष्ये वर्तमाने श्वः कियन्तो जना शेषिष्यन्ते ? को वा जानीते ? गन्धर्वनगरकल्पनाभिः किंचिदभ्यूह्य प्रजाक्षये साधिते तादृशविपत्तौ च समुपस्थितायां पुनस्सृष्टिः असाध्या भवेत् । महाजनानां वर्तमानत्वे तु हतशेषाः प्रभवेयुः प्रपंचयात्रानिर्वहणे । अपि चेदं आलोचनीयम् । प्रजानां अनिष्पादे निष्पन्नानां च हनने च केवलं वयं प्रभवामः, न तु तदुत्पादने तत्संवर्धने वा । किं न जानीथ यूयं कियन्तः सन्ततिहीनाः व्रतपूजापरायणाः कृतगर्भशोधनाः निराशा एव अवस्थिताः । तेषां सन्तानोत्पादने यदि प्रभवेत यूयं तर्हि तदुत्पादविनाशौ यथेच्छं कुरुत । सन्ततित्रयपर्याप्ततानिर्बन्धोपि न समीचीनः । तेषु कति जीवेयुः, जीवितेषु वा कति प्रयोजका भवेयुरिति को वा निर्धारयिष्यति ! अपि च अधुना कन्यका एव बह्व्यो विद्यन्ते । तासां सन्ततिः न खलु प्रपंचं द्रक्ष्यति । ताश्च कन्याः यथौचित्यमेव वर्तेरन् लोके । गर्भनिरोधनसाधनप्रचारस्तु कन्याविधवाश्रांशिकीभूय गृहिणोपि विभ्रंशयिष्यति । शस्त्रचिकित्सया पुंस्त्वस्त्रीत्वहानिः बहुत्रानुभूता । गर्भमूत्रनाळव्याधयश्च उत्पादिताः । अर्गलनालिकायोजनेन च काश्चन युवतयः वल्मीकव्रणार्दिता अभवन् । एवं अनेका विपद एव समुपलभेरन् । स्त्रियश्च अमातरः राक्षस्यः सम्पद्येरन् । एतन्मार्गप्रवर्तितास्ताः एकमपि प्रसवितुं किं वांछेयुः ? इदानीमेव बह्व्यो नागरिकनार्यः स्वसुतं क्षीरचूर्णेनैव केवलं पोषयन्ति, न स्तन्येन । तथाकरणे स्वयौवनभङ्गभीतिस्ताः पीडयति । एतादृशीनां तासां कृते गर्भनिरोधसाधनसमर्पणे च ताः कथं वा तदुपयुज्य स्वयौवनं न संरक्षेयुः? एतद्रीत्या सर्वनाशस्समुपस्थितो वर्तते प्रपंचस्य, तत्रापि भारतदेशस्य ।

इदमत्र प्रधानतः अवगन्तव्यं यद् अयं प्रचारः हैन्दवेष्वेव स्वप्रभावं दर्शयन्ति । हैन्दवा एकपत्नीका अपत्नीका वा प्रायशो भवन्ति । तस्मात्तेषां एकैकशः त्रिन्यूना एव सन्ततिः भवेत । मुस्लिमानां बहुपत्नीकत्वात् तेषां च असंख्याका सा स्यात । एवं च दशसु वर्षेष्वेव हैन्दवजनसंख्यामतिक्रम्य मुस्लिमसंख्या संदृश्येत । तेन चैतत भारतं पाकिस्थानमेव किं न भवेत ? एतदुद्देशेनैव विदेशीयाः केचन इदं प्रावर्तयन्निति अस्मदीयाश्च यथोक्तग्राहिणः तद्वचनानि आवर्तयन्तीति केषांचिन्मतम् ।

यदि सत्यमेव उत्पत्तिनिरोध आवश्यकः तर्हि प्रजासु ब्रह्मचर्यगौरवं आरोग्यातिशयं सत्फलानि च सम्यक् प्रबोध्य स्त्रीषु पुंस्सु च जितेंद्रियत्वमापादयन्तु महान्तः । तेन च भारतजातेः प्रतिष्ठा बलमारोग्यं च वर्धेरन् । उत्पन्नाश्च शिशवः दृढा नीरोगाश्च भवेयुः । कोयं प्रयासो नाम ध्वनिग्राहकप्रदानेन, धनसमर्पणेन, विश्रांत्यप्रदानेन एवंविधेन मिषेण हठात् कपटेन वा प्रजानां परिपीडने ।

अन्नसंकटनिवारणोपायश्च अयं न भवति । स्थलजलदोहदादिसंविधानेन खलु तन्निराक्रियेत ? सस्यानि च बहुलं फलन्त्येव इदानीम् । परन्तु कर्षकाः वणिजश्च धान्यादिकं पाताले निक्षिपन्ति, मूल्यवर्धने किंचित्किंचित् बहिः आनयन्ति । गुडविषयकपरिस्थित्यामवलोकितायां इदं स्पष्टं भवति । प्रथमतः न कुत्रापि गुडं लब्धमासीत् । प्रदेशान्तरप्रापणनिषेधे प्रकाशिते सति सर्वकारेण तद्विक्रेतारस्तदुत्पादकाश्च एतन्नीतिं दूषयन्तः स्वगुडशर्करादीनां अविक्रयस्थितिः भवेदिति परिदेवन्ते । गुडस्यैवाभावे एवं परिदेवनमनर्हमेव खलु । निगूहितस्यैव तस्य विषये तेषामिदं परिदेवनं युज्यते ।

एवमेव सर्वेषां वस्तूनां विषये वर्तते । अतः क्षेत्राणां निरन्तरकृषौ, तदुत्पन्नानां आपणप्रापणे च प्रयासः क्रियेत चेत्साधु भवेत् ।

अपि च ऋतुमत्याः विवाहकरणे पितुः, ऋतुस्नानदिनातिक्रमणे भर्तुश्च दोषः शास्त्रेषु प्रतिपादितः । एवं च गर्भनिरोधानुष्ठाने भ्रूणहत्यादोष अवश्यं आपत्स्यते । गर्भस्रावस्यापि शासनीयतासंपादने किं वा भविष्यति न ज्ञायते ।

अतः सन्तोनुपालयन्तु वेदवचनं "प्रजातन्तुं मात्यवत्सेत्सीः" इति ।



# संस्कृतवाङ्मये वैज्ञानिकार्थविशेषाः

श्री· पिडपर्ति शेषाचलशास्त्री

## (भगवद्गीतायां पंचदशोध्यायः)

न तद्भासयते सूर्यो न शशांको न पावकः ।
यद्गत्वा न निवर्तन्ते तद्धाम परमं मम ॥ ॥ ६ ॥

वैज्ञानिकार्थः – तत = तन्त्रीस्थानं, सूर्यः, न भासयते = न प्रकाशयते, शशांकः = चद्रः, न भासयते, पावकः = अग्निः, न भासयते, यत् = स्थानं, गत्वा = स्पृष्ट्वा, न निवर्तन्ते = न प्रतिनिवर्तन्ते, तत् = तादृशं, परमं = श्रेष्ठं, धाम = किरणः प्रभातञ्च "धाम देहे गृहे रश्मौ स्थाने जन्मप्रभातयोः" इति मेदिनी, मम = अस्मत्सम्बन्धि ।

तात्पर्यम् – कृष्णशब्दस्य लोहार्थकत्वमस्ति नानार्थरत्नमालायाम् । तथाचात्र कृष्णस्य चुंबकलोहेन सहाभेदाऽध्यवसायः । कर्वनेन सहार्जुनस्य अध्यवसायः । तथा च तं तन्त्रीप्रदेश न सूर्यः चन्द्रोग्निर्वा प्रकाशयितुं शक्नोति । तत्स्पर्शमात्रेण जनाः तत्रैव मरिष्यन्ते । तादृशः किरणः प्रभातं चायस्कान्तसंबन्धीत्येव ज्ञेयम् ।

राजकीयार्थः – तत् = राज़्यस्थानं, सूर्यः = अज्ञाननाशकः शत्रुनाशकश्चाधिकारी, न भासयते = न प्रकाशयति, शशांकः = शशजातिः अधिकारी, न भासयते, पावकः = सदाचारयुक्तः, न भासयते, यत राज़्यस्थानं, गत्वा = ाप्प्य, न निर्वन्ते = यावज्जीवं तत्र स्थित्वा ततो न विरमन्ति, तद्धाम = तादृश स्थानं, मम = मत्संबद्धमेव ।

तात्पर्यम – सूर्यवत् दीप्तिमान् शत्रुसंहर्ता शशजातित्वेन उत्तमः सदाचारवांश्चाधिकारी तत् राज्यस्थानं न प्रकाशयितुमलम् । तत्र स्थिताः अविच्छिन्नं यावज्जीवं तत्रैव व्याप्रियन्ते । तादृशं राज्यस्थानं भगवद्विभूतिरेव ।

# सुलभपाठमाला ३३

## आपणः ५

अयं पात्रापणः । अत्र स्थूलानि सूक्ष्माणि च बहूनि पात्राणि सन्ति । अयं कटाहः । कटाहः जलादिस्थापनाय पचनाय चोपयुज्यते । अयं कलशः । अयं जलाहरणार्थं उपयुज्यते । इयं कर्करी । इयं च कलशात् सूक्ष्मा कूपात् जलमुद्धर्तुं बालिकानां जलाहरणार्थं च अनुकूला वर्तते । एताः स्थाल्यः । पश्य, एताश्च बहुविधा दृश्यन्ते । काश्चन ऊर्ध्वाधस्समवैशाल्याः, अपराः कुंचितमुख्यः, अन्याः विवृतमुख्यः, इतराः बृहत्कुक्षयश्च दृश्यन्ते । एताश्च अन्नशाकादिपाकाय उपयुक्ता भवन्ति । इयं कन्दुः वर्तते । पश्य, अत्र अन्तः मध्ये कश्चन शरावो विद्यते । तस्मिंश्च निम्नानि सन्ति यत्र इड्लिकापिष्टं निधाय स्वेदयन्ति पाचकाः । एते चषकाः । एते च जलादिद्रवपदार्थपानायोपयुज्यन्ते । एते कंसाः । एतान् च कापिकादिपानायोपयुञ्जते जनाः । शरावोपरि कंसं कंसे च कापिकां निधाय समर्पयन्ति पाचकाः । पातारश्च तां शरावे विस्राव्य शीतलीकृत्य पिबन्ति । एतदम्बरीषम् । अग्निदग्धस्य अस्य उपरि चपातिकाः दोषकाश्च साधयन्ति । एतदृजीषम्, अत्र तैलमापूर्य क्वथयित्वा तत्तैले वटुकादीन् पचन्ति पाकज्ञाः । एता दर्व्यः । पश्य। एता बहुविधास्सदृश्यन्ते । वर्तुलमुख्यः सममुख्यः सरंध्रा अरंध्राः निम्नमुख्यः हस्तमुख्यः सनाळा विद्यन्ते । एताभिः शाकपाकादीनां परिवर्तनं परिक्षेपणं क्षोभणं मर्दनं परिवेषणं इत्यादिकं क्रियते । इयं कर्दूः । एतं दारुदर्वीमाचक्षते एतेन सूपादिकं निष्पिष्यते यावन्मार्दवम् । अयं कुतुपः । अत्र तैलादिकं रक्षन्ति गृहिण्यः । इयं छुल्लिः । पश्य, इयं अयोमया वर्ततेऽत्र । मृण्मयापि एषा विरच्यते कुंभकारेण । एतन्मुखे काष्ठानि समावेश्याग्निना अवद्योत्य उपरि स्थाल्यादिकं स्थापयित्वा पाकं निवर्तयन्ति । एषा हसन्ती । अत्र अंगारानापूर्य तदुपरि पाकं निधाय पचन्त्यन्नादिकम् । अस्याः अधः स्थितेन रन्ध्रेण वायुं ताळवृन्तवीजनजनितं वाहयन्ति । तेन च वायुना अंगारा प्रज्वलेयुः ।

इयं करपात्रिका । अस्यां चत्वारि पात्राणि उपर्युपरि सुश्लिष्टं निवेशितानि दृश्यन्ते । पात्रचतुष्कमपि वक्रितशकलेन सन्दानितं कीलितं च एकपात्रमिव भासमानं करधारणे अनुकूलं वर्तते । अत्र पात्रेषु प्रत्येकमन्नं शाकं चोष्यं तक्रमित्यादिकं निधाय नयन्ति इष्टदेशम् । इयं च अन्नकरपात्रिका । एवं सूक्ष्मं भक्ष्यकरपात्रिकापि वर्तते ।

पाने च भोजने स्नाने दाने भिक्षाटनेपि च । पात्रमावश्यकं पात्रहीनोऽपात्रं भवेन्नरः ॥

# संस्कृतभाषाप्रचारिण्यास्सभायाः प्रवङ्गदाक्षिणायनपरीक्षाफलितानि

# Samskrita Bhasha Pracharini Sabha, Chittoor.

## RESULTS OF SEPTEMBER EXAMINATIONS 1967.

*The following are the Registered numbers of successful candidates who appeared for the Sanskrit Examinations held on 9th, 10th and 11th September 1967 by the above Sabha.*

### परिचयः PRICHAYA

I Class : 1 2 5 10 26 27
35 48 51 52 53 54 60 61 71
104 105 106 107 108 113 114 115 130
139 141 142 143 144 145 146 147 150
152 159 162 164 165 169 170 172 178
179 188 212 213 214 216 217 237 238
255 256 257 261 262 265 266 267 268
269 270 272 274 303 338 339 347 349
350 353 363 368 369 374 376 381 383
415 421 422 423 424 428 434 435 439
440 441 442 443 and 444.

II Class : 11 18 25 49 50 55
56 59 72 77 85 98 100 101 102

103 110 111 112 117 128 131 133 138
140 151 167 168 173 174 176 177 180
189 190 215 218 254 263 264 271 273
276 305 306 309 313 348 352 360 361
362 370 371 377 379 382 388 389 391
394 411 412 416 and 437.

III Class : 6 12 36 37 73 74
75 76 90 91 92 94 96 99 109
135 136 148 149 160 161 163 166 175
182 184 187 277 302 304 308 311 312
314 318 319 320 358 359 372 373 380
384 385 386 387 392 393 395 396 409
418 419 and 438.

## अभिज्ञ: ABHIGNA

I Class : 19 20 21 45 79 80
154 155 158 206 207 211 227 229 230
283 340 344 351 354 375 425 426 430
and 431.

II Class : 16 17 18 22 63 156
157 194 195 196 197 199 208 228 231
240 281 282 286 330 331 343 346 355
356 357 364 378 403 452 and 454.

III Class : 7 8 14 15 39 40
41 44 118 119 120 192 193 198 200
201 204 205 209 234 236 239 241 321

323 326 327 329 332 334 342 365 366
367 398 399 402 404 433 and 451.

## विचक्षण: VICHAKSHANA

I Class : 80 242 and 245.

II Class : 31 67 68 81 84 244
290 445 446 and 447.

III Class : 32 64 65 66 69 70
82 83 243 291 292 293 295 and 296.

## समर्थ: SAMARTHA

I Class : Nil.
II Class : 297 only
III Class : 260, 298, 299 and 449.
I Part only : 220, 221, and 250
II Part only : 246, 47, 248 and 249.

## कोविद: KOVIDA

I Class : Nil.
II Class : 34 only.
II, III and V Parts only : 301 only.
I and II Parts only : 427 only.
II and III Parts only : 300 only.
III Part only : 253 only.
IV Part only : 251 and 252.

The following are the names of the candidates who stood first in first class of the above examinations. prizes will be awarded to them in due course.

*Parichaya* : No. 338. UMA. Nanganallur, Madras.
*Abhigna* : No. 211. MEENAKSHISUNDARAM, Thanjavur.
*Vichakshana* : No. 245. N. KANNAN, Thirunagar, Madurai.

उत्तीर्णाः 353.

| परीक्षाः | अभ्यर्थिनः | उपस्थिताः | उत्तीर्णाः प्र. श्रे. | द्वि. श्रे. | तृ. श्रे. | खण्डशः |
|---|---|---|---|---|---|---|
| परिचयः | 259 | 221 | 92 | 65 | 54 | — |
| अभिज्ञः | 134 | 116 | 25 | 31 | 40 | — |
| विचक्षणः | 36 | 31 | 3 | 10 | 14 | — |
| समर्थः | 19 | 16 | — | 1 | 4 | 7 |
| कोविदः | 7 | 7 | — | 1 | — | 6 |
| | 455 | 391 | 120 | 108 | 112 | 13 |

प्लवङ्गदक्षिणायन (सेप्टंबर) परीक्षासु उपयुक्तानि केन्द्राणि - 33.



(१) अंबत्तूरु (२) अनकापल्ली (३) अनन्तपुरम् (४) आल्लगड्ड (५) कडपा (६) क्रोंपेट (७) कोयंबत्तूरु (८) गुण्टूरु (९) चित्तूरु (१०) चिदम्बरम् (११) चीराल (१२) जिल्लेळ्ळमुडि (१३) तञ्जावूरु (१४) ताम्बरम् (१५) तिरुवल्लिक्केणी (१६) तिरुनगर (१७) तिरुचिरापल्ली (१८) त्यागरायनगरम् (१९) द्वारकतिरुमल (२०) नंगनल्लूरु (२१) नागपट्टणम् (२२) नेल्लूरु (२३) प्रोद्दूटूरु (२४) भीमवरम् (२५) मदुरै (२६) मन्त्रालयः (२७) मन्नार्गुडि (२८) मछलीपट्टणम् (२९) विजयवाडा (३०) शाहपूर (३१) सत्यमंगलम् (३२) सेलम् (३३) हैदराबाद ।

कौ. श्रीनिवासाचार्यः,
परीक्षामन्त्री.



# विद्या

## श्री इवटूरि. सनन्दाराध्यः

### मचिलीपट्टणम्.

विद्या नाम ज्ञानमिति ज्ञेयम् । ज्ञानं द्विविधं लौकिकं अलौकिकं चेति । लौकिकज्ञानमिहलोकसंबन्धि, अलौकिकज्ञानं परलोकसंबधि । एतयोर्ज्ञानयोः व्यतिरिक्तं ज्ञानं ब्रह्मज्ञानम् । ब्रह्मणः ज्ञानं ब्रह्मज्ञानमिति ज्ञेयम् ।

लौकिकज्ञानं बहुविधम् । लौकिकज्ञानाय लोके पाठशालाः कलाशालाः बह्व्यः दृश्यन्ते । पाठशालासु सामान्य ज्ञानं सम्पाद्यते । कलाशालासु विशेषज्ञानं सम्पाद्यते । इह लोके जीवितुं मानवानां लौकिकज्ञानमावश्यकम् । लौकिकज्ञानस्य फलमिहलोकजीवनम् । तत् ज्ञानं मानवानामुत्पत्तेरनन्तरं पञ्चवर्षेभ्यः पश्चात्क्रमशः क्रमशः गुरोस्सान्निध्ये बोध्यते । इहलोकज्ञानस्याऽवधिः कलाशालासु निर्णीयते । एवं सम्पादितं विशेषज्ञानं सम्पादकस्य मरणपर्यन्तमेवानुवर्तते । मरणस्यानन्तरं तत् ज्ञानं सर्वं तिरोहितं भविष्यति । किन्तु पूर्वज्ञानस्य संस्कारमात्रमेव जन्मान्तरे फलिष्यतीति प्राज्ञाः वैदिकज्ञानसंपन्नाः वदन्ति । एतावत्पर्यन्तं यद्विमृष्टं मया तत् ज्ञानं संग्रहेण लौकिकं ज्ञेयम् ।

अथ विशेषतः पारलौकिकं ज्ञानं विमृश्यते । मनुष्यलोकादतीताः लोकाः नानाविधाः बहवस्सन्ति । ते, नारकास्स्वर्गा इति द्विधा विभज्यन्ते । नारकेषु लोकेषु केवलं दुःखमेव फलम् । ये मानवाः केवलाऽधर्मपरायणा भवन्ति ते तत्तत्कर्मानुसारिणः नरकलोकान् प्राप्य, तत्र दुःखफलमनुभवन्ति । ये मानवाः केवलधर्मानुसारिणः भवन्ति ते स्वर्गादिलोकेषु आत्मकृतं धर्मानुरूपं फलमनुभवन्ति ।

एतद्द्वयोर्लोकयोः अनुभूयमानं सुखं वा दुःखं वा अनित्यमिति शास्त्र-दृष्ट्या पंडिताः वदन्ति, तथा बोधयन्ति च । तस्माद्धेतोः कालस्य परिणाम-

मनुसृत्य तत् द्वयं विसर्जनीयमिति मन्ये। विसृज्य किं कुर्यादित्युक्तौ ब्रवीमि। तद्विधानमधः प्रपञ्च्यते।

मनुष्यलोके वा इतरेषु वा लोकेषु यत्सुखं यद्दुःखं वर्तते, तत्सर्वमनित्यं सर्वेषां प्राकृतिकलोकानामनिवृत्तत्वात्। नरकलोकेषु दुःखमिव, स्वर्गलोकेषु प्राप्तं सुखमपि कालानुसारेण दुःखभाजनं भविष्यति, क्षीणे पुण्ये मर्त्यलोकं विशन्तीति वचनात्। ततः तत्तत्स्वर्गं सुखमवांछनीयमनित्यत्वात्। विचार्यमाणे सति अनित्यानां सुखदुःखलोकानामुपरि, नित्यं ब्रह्मणः पदं वर्तते। तत् नित्यमिति वैदिका वदन्ति। वैदिका नाम पण्डिताः। वेदेषु यत् ज्ञानं वर्तते तत्संपादका वैदिका इत्युच्यन्ते। ते वेदाननुसृत्य नित्यब्रह्मपदमिति किंचन विद्यते इति वदन्ति। तेषां वचनानि मनस्यादरणीयानीति मत्वा तेषु विश्वासः कर्तव्यः। विश्वातीतं ब्रह्मणः नित्यं पदमेकं वर्तते इति मत्वा तत्सम्पादनार्थं कृषिः कर्तव्या। कथंभूता सा कृषिश्चेदुच्यते।

मोक्षार्थं वैराग्यं, निष्काककर्म, ज्ञानं भक्तिः, एतन्नामानि चतुर्विधानि साधनान्यावश्यकानीत्युपनिषद्ज्ञानसम्पन्नैरुच्यन्ते। तानि साधनानि मुमुक्षूणामेवात्यन्तावश्यकानि। नो चेत्, ते, मुमुक्षुत्वाय नार्हन्ति। तेषां साधनानां मध्ये वैराग्यं नाम किमित्युक्तौ उच्यते। राग नाम प्रेमा। सुखदायकेषु वस्तुषु नराणां प्रेमाविर्भविष्यति। सुखदायकाः अनित्याः विषयाः लोके विद्यन्ते। तेषु तु कतिपये विषयाः अत्यन्तं मनोहारिणः दृश्यन्ते। तैराकृष्टमनसो बहवः मानवाः तान् वांछन्ति। एवं मोहाविष्टमानसाः सन्तः जनाः पंडिता अपि तेषु निरवधिक प्रेमाणं समाप्नुवन्ति। तथाविधः प्रेमा ब्रह्मपथावरोधकः भवति। तेन वैराग्यं न जनिष्यति। स एव ब्रह्मपथावरोधिषु प्रथमः।

किमर्थमिति चेत् लोकास्ते सर्वे अनित्याः। अनित्यफलावाप्त्यर्थं या कृषिः क्रियते सर्वा सा कृषिः अनित्यफलदेति वाच्या। अनित्यफलदायिन्या कृष्या किं प्रयोजनम्? न किमपि प्रयोजनमिति मत्वा प्राज्ञास्तेषु न बुद्धिः कर्तव्येत्युपदिशन्ति। नित्यफलमेव वांछनीयमिति वदन्तः नित्यफलसंसिद्ध्यै,काम्यानि कर्माणि विसृज्य, नित्यफलप्राप्त्यै नित्यकर्म नाम निष्कामकर्म वांछनीयमिति सुष्ठु बोधयन्ति।

तत्प्रबोधनमनुसृत्य, निष्काम कर्मकर्तव्यमित्युपदेशः क्रियते। एतेन काम्यं कर्म ब्रह्मपथावरोधिषु द्वितीयम्।

ज्ञानं नाम विवेकोदयः। प्रवृत्तिर्या मनसः सा ज्ञानशब्देन गीयते। तद्विवेकः त्रिविधः। तेष्वेकः अद्यतनप्रपञ्चसंबन्धी। द्वितीयः परलोकिकसंबन्धी। तृतीयो ब्रह्मसंबन्धी। एतादृशानां विवेकानां त्रयाणां मध्ये ब्रह्मपदार्थस्य अन्वेषणं क्रियते चेत् तद् ज्ञानं परोक्षं भवति। तत्परोक्षज्ञानात् परमेश्वरे भक्तिस्संजायते। तद्भक्तिरनन्या चेत् अपरोक्षज्ञानं समुद्भवति। अपरोक्षज्ञानेन आत्मनः नित्यशांतिर्जायते। ज्ञानभक्तिभ्यां विना ब्रह्मणः अपरोक्षसाक्षात्कारो न संभवति। ब्रह्मान्वेषणतत्पराणां जनानां ऐहिकामुष्मिकलोकवांछा विसर्जनीया। तद्वत तद्वस्तुगताभिलाषः विसर्जनीयः। द्वावेतौ ऐहिकामुष्मिकज्ञानरागौ ब्रह्मणः पदस्य प्राप्तये अवरोधिनौ इति मत्वा सविनयं भवत्सु निवेद्य समाप्तिं गमयित्वा ग्रन्थविस्तरभिया मदीयो व्यास एष विरम्यते।



# विजयोऽस्मदीयः

रचयिता - खण्डवल्लि सूर्यनारायणशास्त्री

धर्मो यदा यत्र जनेषु रूढः
जयस्तदा तत्र जनैस्सुलभ्यः ।
यद्भारतीया निजधर्मयुक्ताः
तस्मादवश्यं विजयोऽस्मदीयः ॥
यस्य प्रभावात् ध्रियते हि लोकः
तं तादृशं धर्ममपास्य चीनाः ।
आधारशून्या बत योद्धुकामाः
तस्माऽदवश्यं विजयोऽस्मदीयः ॥
धर्मस्सदा रक्षति रक्षितश्चे-
देषा प्रसिद्धा हि सनातनोक्तिः ।
वयं च सद्धर्मनिविष्टचित्ताः
तस्मादवश्यं विजयोऽस्मदीयः ॥
लोकास्समस्तास्सहकारयुतात्
परस्परं सौख्ययुता भवन्ति ।
अहो हि चीनास्सहकारशून्याः
तस्मादवश्यं विजयोस्मदीयः ।
प्रारंभगुर्वी क्षयणीति सूक्तिः
चैनीयनीतौ प्रतिभाति नूनम् ।
आरम्भशूरत्वयुता यतस्ते
तस्मादवश्यं विजयोऽस्मदीयः ॥
सर्वत्र विश्वस्थितिहेतुभूत-
धर्मप्रियाः भारतदेशलोकाः ।
तच्चीनदेश्यास्तु विसृष्टधर्माः
तस्मादवश्यं विजयोऽस्मदीयः ॥

# युक्तिबोधः

काल्लूरि हनुमन्तरावः



महात्मा गौतमबुद्धः प्रजानां बौद्धमतं प्रबोधयन् देशे पर्यटति स्म । एकदा स राजगृहनाम्नो नगरस्य बहिः पर्वतं प्रत्युवास । नित्यं जनाः सहस्रशस्तत्रागत्य तन्मुखविनिस्सृतं बोधामृतं पपुः । तस्मिन् नगरे काचिदनाथा आसीत् । तस्याः एकैकपुत्रः मित्रजनैः सहोपवने क्रीडापरः सर्पदष्टो ममार । अशनिपातसदृशीं पुत्रमरण दुर्वार्तां श्रुत्वा सा माता तत्र सहसा निपत्य सोरस्ताडं रुरोद । जना अपि तत्र समवेता बभूवुः । केचिदौषधानि बालकस्य मुखे अपातयन् । केचिन्मंत्रान् प्रायुञ्जत । अपरे तु कदापि मृतो बालः, अधुना किमपि कार्यं नास्तीति वदन्तः अश्रुप्लावितनेत्राः निर्जग्मुः । केचिदब्रुवन् अस्मिन् पर्वते महाप्रभावः कश्चित्तापसो-दयामयो निवसति । मृतपुत्रं तत्समीपं नय । स तं पुनरुज्जीवयिष्यति इति । मृतकुमारं वहन्ती, निर्विरामदुःखाश्रुपर्याकुलनयना, विधिं निन्दती, सा गौतमबुद्ध-समीपं प्राप्य स्ववृत्तान्तं निवेदयामास । निश्चयेन तव पुत्रमुज्जीवयितुं प्रयतिष्ये । तदर्थं सर्षपा औषधं भवन्ति । कदापि ये न दुःखितास्तेषां गृहात सर्षपान् आनयतु भवती इति उवाच । तथेत्युक्त्वा सा पुत्रकलेबरं तत्र न्यस्य नगरं जगाम । तत्र तया पृष्टा काचित् पुरन्ध्री "सर्षपान् यावत् इच्छसि गृहाण तावतः । दुःखवती तु अहमस्मि । मम पुत्रो वृक्षपांशुः परुदेवमृत" इति अवदत् । सा अन्यं गृहं गता तत्र गृहिण्या "मम पतिर्गत" इति अभिहितम् । सा नगरे सर्वाण्यपि गृहाणि गतवती दुःखरहितां तु गृहिणीं न प्राप्तवती, पुनरागत्य यथावृत्तं निवेदयामास । तदा गौतमबुद्धः "जननं तथा मरणं सर्वजन्तुसाधारणे । दुःखहीनो जनो नास्ति लोके । स्वयमेवैतत्सत्यं ज्ञास्यतीति तथात्वमुक्तवती" इति प्रबोधयामास ।



# मधुरं मधुरम्

लेखकः - रामस्वरूपशास्त्री,
संपादकः, बालसंस्कृतम्, मुम्बई - ७७.

गिरयो मधुरास्तरवो मधुरा
मधुरा सरितश्च दिशो मधुराः ।
निखिलं वरभारतवर्षभवं
मधुरं मधुरं मधुरं मधुरम् ॥

मधुरा दिवसा मधुराश्च निशाः
ऋतवो मधुराः शरदो मधुराः ।
सकलं सुरुभारतभूमिभवं
मधुरं मधुरं मधुरं मधुरम् ॥

मधुरा प्रकृतिर्मधुरा प्रगतिः
मधुरा सुषमा गणभारतजा ।
मधुरं चरितं ध्रुवसंस्कृतिजम्
मधुरं मधुरं मधुरं मधुरम् ॥

पुलिनं मधुरं सिकता मधुरा
सलिलं मधुरं लहरी मधुरा ।
सकलं सुरशैवलिनीप्रभवं
मधुरं मधुरं मधुरं मधुरम् ॥

मधुरं दधि चापि पयो मधुरं
मथितं मधुरं च घृतं मधुरम् ।
मधुरं शुचि गव्यविधं विविधम्
मधुरं मधुरं मधुरं मधुरम् ॥

कृतयो मधुराश्च कला मधुराः
  मधुरो विनयो मधुरश्च नयः ।
सकलं प्रियभारतमातृभुवो
  मधुरं मधुरं मधुरं मधुरम् ॥

श्रुतयो मधुराः स्मृतयो मधुराः
  निखिलाश्च पुराणकथा मधुराः ।
सकलं मुनिवीररचितं मधुरम्
  मधुरं मधुरं मधुरं मधुरम् ॥

मधुराणि पदानि गुणो मधुरो
  मधुरा रसरीतिरलंकृतिका ।
निखिलं खलु संस्कृतसाहितिकं
  मधुरं मधुरं मधुरं मधुरम् ॥



# प्रार्थना

## श्री नारायणमूर्तिः, आल्लगड्डा.

[ श्रीवासवीकन्यकापरमेश्वर्या अवतरणम्
कल्यादि ४१२१ वैशाखशुद्धदशमी शुक्रवारे]

पायाद्वो वासवीकन्या पावनी वैश्यवंशजा ।
कुसुमकुलदीपा च विष्णुवर्धनघातिनी ॥

कृते च रेणुकादेवी त्रेतायां जानकी तथा ।
द्वापरे द्रौपदी चैव कलौ वासवकन्यका ॥

श्रीकन्यकाम्बां विनतावलम्बां मुखप्रभानिर्जितचन्द्रबिम्बाम् ।
निजांघ्रिवन्दारुसुरेट्कदम्बां तां कन्यकाम्बां प्रणमामि नित्यम् ॥

पुरे पुरे यन्निलये यदीयां कृत्वा तु सेवां निखिलार्यवैश्याः ।
भजन्ति सौख्यानि निरन्तराणि तां कन्यकाम्बां प्रणमामि नित्यम् ॥

वन्दारुबृन्दारकबृन्दशीर्षमन्दारदीव्यच्चरणारविन्दाम् ।
सर्वागमान्तप्रतिपादितां तां वन्दे मुदा वासवकन्यकाम्बाम् ॥

श्रीमद्गौतमकन्यकाशुभतटे ज्येष्ठाचलाख्ये पुरे
नानारत्नमनोज्ञभूषणपरिष्काराञ्चिता मानिता ।
राजन्ती वरदाभयांकुशमहापाशोल्लसत्सत्करा
श्रीकन्यकापरमेश्वरी विजयते सर्वामरैर्वन्दिता ॥



श्रीलक्ष्मीनृसिंहपरब्रह्मणे नमः

# श्रीमालोलसुप्रभातम्

श्री पैत्तंबाडि महाकविः व॰ रामानुजाचार्यः



श्रीलोलं नृहरिं नत्वा तदंकस्थां श्रियं तथा ।
श्रीशठारिं यतीन्द्रं च श्रीमद्वेदान्तदेशिकम् ॥ ॥ १ ॥

अहोबिलेशमालोलमठसंस्थापकं गुरुम् ।
आद्यं शठारियोगीन्द्रं आचार्यानखिलानपि ॥ ॥ २ ॥

वक्ष्याम्यहोबिलक्षेत्रमाहात्म्योदीरितक्रमात् ।
श्रीमालोलहरेरेतत् सुप्रभातं नवं शुभम् ॥ ॥ ३ ॥

श्रीनारदो ऋषिगणेभ्य उवाच यस्य
माहात्म्यमद्भुतमहोबिलनामकस्य ।
क्षेत्रस्य ते तदधिपस्य च सर्वसेव्यम्
मालोल मानुषहरे तव सुप्रभातम् ॥ ॥ ४ ॥

जातो हिरण्यकशिपोर्गृहसंस्थरत्न-
स्तम्भो महीधरतया च भवान् तदन्तः ।
तद्दैत्यनिग्रहकृते नरसिंहरूपी
मालोल मानुषहरे तव सुप्रभातम् ॥ ॥ ५ ॥

तस्मादहोबिलमिदं समभूत हि वीर-
क्षेत्रं त्वमेतमसुरं नखरैर्विदार्य ।
योऽक्षालयः करयुगं खलु रक्तकुण्डे
मालोल मानुषहरे तव सुप्रभातम् ॥ ॥ ६ ॥

संसारमोचनकरी भवनाशिनीति
ख्यातैव नश्च कृपया तव यस्य गंगा ।
चक्रे त्वदुग्रशमनं स्वजलाभिषेकात्
मालोल मानुषहरे तव सुप्रभातम् ॥ ॥ ७ ॥

तप्त्वा तपो हि गरुडस्तव वाहनत्वम्
लेभे वरं च निजनामगिरेरमुष्य ।
यत्त्वत्कटाक्षवशतः पतगाधिनाथो
मालोल मानुषहरे तव सुप्रभातम् ॥ ॥ ८ ॥

वेदाः पुराऽसुरगणेष्वपहारभीताः
तप्त्वा वरं त्वयि तथैव हि लेभिरेऽत्र।
वेदाद्रिरित्यपि निजाभिधमापसिद्धिम्
मालोल मानुषहरे तव सुप्रभातम् ॥ ॥ ९ ॥

भक्तावनाय निजरूपमहोबिलेऽद्रौ
यस्त्वं विधाय नवधाऽपि नवस्वपीह ।
क्षेत्रेषु रक्षसि च नोऽद्यजनांश्च भक्तान्
मालोल मानुषहरे तव सुप्रभातम् ॥ ॥ १० ॥

द्वास्थौ जयश्च विजयो हि तवर्षिशापात्
दैत्यौ हिरण्यनयनश्च हिरण्यनामा ।
जातौ तयोस्त्वमवधीः किटिरूप आद्यं
मालोल मानुषहरे तव सुप्रभातम् ॥ ॥ ११ ॥

पश्चात् हिरण्यकशिपोर्वरदर्पपूर्णात्
प्रह्लादमस्य तनयं त्वयि भक्तिपूर्णम् ।
यस्त्वं ररक्षिथ मुहुर्विनिपीडितं तं
मालोल मानुषहरे तव सुप्रभातम् ॥ ॥ १२ ॥

अन्ते हिरण्यकशिपुं नखरैर्विदार्य
स्तम्भोद्भवो नरहरित्ववपुर्धरो यः ।
प्रह्लादमेनमसुराधिपमभ्यषिञ्चो
मालोल मानुषहरे तव सुप्रभातम् ॥ ॥ १३ ॥

देव त्वदुग्रशमनाय सुरार्थितं त्वं
जित्वा शिवं शरभरूपिणमिन्द्रमुख्यैः।
देवैस्तुतोऽभ्यशमयस्तव रूपमुग्रं
मालोल मानुषहरे तव सुप्रभातम् ॥ ॥ १४ ॥

यत्त्वत्पदांबुरुहयुग्मसमुद्भवेऽयं
स्रोतस्विनी सुरनुता भवनाशिनीति ।
संसारतापशमनं वितनोति तस्य
मालोल मानुषहरे तव सुप्रभातम् ॥ ॥ १५ ॥

प्राकारगोपुरनिकेतनमण्टपादीन्
बिंबार्चनाभरणयानमहोत्सवादीन् ।
कुर्वन्ति ये तव च वांछितदोऽसि तेषां
मालोल मानुषहरे तव सुप्रभातम् ॥ ॥ १६ ॥

मालोलसन्निधावेतत् नित्यं प्रातः पठन्ति ये ।
तेषां सर्वाण्यभीष्टानि मालोलः प्रदिशेत्स्वयम् ॥ ॥ १७ ॥

मालोल स्वयमेवैतत स्वप्रीत्यै मन्मुखेन हि ।
अकारयत्सुललितं सुप्रभातस्तवं नवम् ॥ ॥ १८ ॥

श्रीशैलसच्चक्रवर्तिवराहाचार्यसूनुना ।
पैत्तंबाडिनिवासेन रामानुजकवीन्दुना ॥ ॥ १९ ॥

दशविधरूपककर्त्राऽप्यभिनवलक्ष्मीसहस्ररचयित्रा ।
अन्यबहुग्रन्थकृता रचितं मालोलसुप्रभातमिदम् ॥ ॥ २० ॥

# काव्यम

के॰ सूर्यनारायणरेड्डिः



काव्यं नाम किम् ? तद्विश्वश्रेयःप्रदं कथं भवतीति प्रतिपाद्यते –

विश्वश्रेयः काव्यम् – निखिललोकानां धर्मादिपुरुषार्थप्रदत्वात काव्यस्य विश्वश्रेयस्त्वमाहुः । माधुर्यसौकुमार्यादिगुणैः उपमाद्यलंकारैः शोभितशब्दार्थावेव काव्यं भवति । काव्येन शृङ्गारादिरसव्यञ्जकेन भाव्यम् । सौन्दर्यात्काव्यमुपादेयं भवति। काव्येन किं प्रयोजनमिति चेत् "काव्यं सद्दृष्टादृष्टार्थं प्रीतिकीर्तिहेतुत्वात" इति वामनः अवोचत् । काव्यपठनात प्रीतिः संभवतीति दृष्टप्रयोजनं, कीर्तिदानात अदृष्टप्रयोजनञ्च भवति । काव्यं सुकवितया भाव्यम् । उक्तञ्च —

"प्रतिष्ठां काव्यबन्धस्य यशसः सरणिं विदुः ।
अकीर्तिवर्तनीं त्वेवं कुकवित्वविडम्बनां ॥

कीर्तिं स्वर्गफलामाहुरासंसारं विपश्चितः ।
अकीर्तिं तु निरालोकनरकोश इति स्वकाम् ॥

अपरिचितालङ्कारशास्त्राणां दोषगुणविवेकशून्यानां काव्यमेतन्नैव प्रीतिमुत्पादयति । काव्यस्य रीतिरात्मा भवति । वैदर्भीरीतिमदेव काव्यं शोभते। लोको विद्याः प्रकीर्णमित्येतानि काव्याङ्गानि भवन्ति । स्थावरजङ्गमात्मनां वर्तनमेव लोको भवति । शब्दस्मृत्यभिधानकोशछन्दोविचितिकलाकामशास्त्रदण्डनीतिपूर्वाः विद्याः भवन्ति । लक्ष्यज्ञानाभियोगवृद्धसेवावेक्षणप्रतिभानावधानानि प्रकीर्णमिति कथ्यन्ते । काव्यपठनात एतद्ज्ञानसंभवात, ज्ञानात् सुखजीवनलाभात काव्यं विश्वश्रेयः भवति । अप्रयुक्तापुष्टार्थादिपदगतसप्तदोषरहितेन अपार्थव्यर्थाद्यर्थगतदशदोषरहितेन काव्येन भाव्यम् ।

काव्यं सृष्टिस्थितनानाविषयानुभवं, याथार्थ्यज्ञानञ्च ददाति ।

उक्तञ्च – "काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये ।
सद्यः परिनिर्वृतये कान्तासम्मिततयोपदेशयुजे ॥ "

परिवर्धते विज्ञानं संभाव्यते यशोर्जयन्ते गुणाः ।
श्रूयते हि सुपुरुषचरितं किं तद्येन न हरन्ति काव्यालापाः ॥ "

नानाद्वन्द्वभूयिष्ठप्रकृत्यनुबद्धजीविनप्रयोजनवते मानवाय उदात्तमहनीयशाश्वत-लक्ष्याणि बोधयत् विविधरसव्यञ्जिनव्याख्यानमहितमहापुरुषजीवितेतिवृतसहितं काव्यं प्रीतिकरं भवति । दैनिकजीवितं मनोबुद्धिहृदयैः निरन्तरसंसर्गेण व्यव-स्थाप्यते । अतः काव्ये एतेषां प्रधानसामरस्याय आवश्यकता भवति । काव्यस्य कथा परमानन्ददा भवति । इतिहासपुराणशास्त्रसारः काव्ये वर्तते । वेदबोधित-विषयस्य सामान्यानां दुर्बोधत्वात तत्प्रचाराय काव्यानि आगतानि । वेदपुराणापेक्षया काव्यानि कान्तासम्मिततया सरसमुपदिशन्ति । प्रियकान्ताकमनीयमंजुलवाक्सुधा-तुन्दिलानि रामायणादिमहाकाव्यानि वेदनिरूपितभगवत्तत्वं मृदुमनोहरमाधुर्यगुणैः प्रसादयन्ति । काव्यान्येतानि अनेकमांधिकराजकीयमतार्थिकविषयान् बोधयन्ति । प्रशस्तरामायणभारतमहाकाव्यानि विश्वजनीनं शाश्वतं विशिष्टांशम् बोधयन्ति । काव्यान्येतानि मानवशीलनिर्माणाय तदुन्नतगुणगणनिरूपणाय ऐहिकपारलौकिक-सौख्यप्राप्तिनिर्देशाय च उद्दिष्टानि । काव्येभ्यः नानाजातिजीवनविधानानि सम्यक् जानीमः ।

"शैशवेऽभ्यस्तविद्यानां यौवने विषयैषिणाम् ।
वार्धके मुनिवृत्तीनां योगेनान्ते तनुत्यजाम् ॥ " इति ।

रघुवंशीयानां वर्तनं बोधयति । अनेन अस्माभिरपि तथैव भवितव्यमिति व्यञ्जयति । वेदवत् शास्त्रवच्च सदसत्कर्मफलान्युपदर्शयति, मित्रवच्च विना निर्बन्धं व्यंग्यतया उपदिशति इति काव्यस्य विश्वश्रेयस्त्वम् । भक्तानां भक्तिमार्गे कर्मज्ञानमार्गाभि-

लाषिणां कर्मज्ञानयोगौ च उपदेशति। धनार्जनपराणां तद्रीतिश्च बोधयति। एवं सर्वाभिलषितं उपदिशति काव्यमिति "विश्वश्रेयः काव्य" मिति वदन्ति। काव्यरचनेन तत्कर्तृणाञ्च धनकीर्तिलाभो भवति। उक्तञ्च –

"आदिराजयशोबिम्बमादर्शं प्राप्य वाङ्मयम्।
तेषामसन्निधानेऽपि न स्वयं पश्य नश्यति॥"

काव्यं यदि निर्दुष्टं स्यात् तत्कर्तृः कामधेनुवत् सर्वकामान् पूरयेत्। एवं काव्यं रचयितॄणां पठितॄणां च श्रेयः प्रददाति।

## श्रीवत्स - बालमन्दिरे शृङ्गेरी शङ्कराचार्याः

मुम्बापुर्यां गिरगाँवविभागे संस्कृतस्य माध्यमेन एव एका मोंटेसरी नाम पूर्व-प्राथमिकी शाला सचालिता अस्ति इति वृत्तं यदा जगद्गुरुभिः श्रीशंकराचार्यैः श्रुतम् तदा तैः आनन्दपरिपूर्णैः आश्चर्यं प्रकटीकृतम्।

अस्मिन् वर्षे "चातुर्मास्य - अनुष्ठान" निमित्तं शृङ्गेरीपीठ - शंकराचार्याणां निवासः मुम्बापुर्यामेव विद्यते।

यद्यपि आचार्यपूज्यपादानां दैनंदिनकार्यक्रमः, विविधैः कार्यकलापैः संपूरित एव विद्यते तथापि तैः ३–११-६७ रात्रौ सार्धसप्तवादने स्वल्पं अवकाशं प्राप्य उपरि निर्दिष्टां शालां द्रष्टुम् उपागच्छन्।

अस्याः शालायाः संयोजकः श्री ल. म. चक्रदेवः तथा च संचालिका सौ० मालतीदेवी च अस्य अतिनूतन - उपक्रमस्य कृते अभिनन्दितौ कृतम्। शालायाः अस्याः वृद्धिः द्रुतगत्या भवतु इति आचार्यैः आशीर्वादः दत्तः।

मुम्बईनगरवासिनः तैः आदेष्टाः यत् तैः स्वेषां बाल - बालिकाः अस्यां शालायां पठनाय प्रेषणीयाः, तेषां मातृभाषा काऽपि भवतु; यतः सर्वा अपि भाषाः संस्कृतस्य पुत्रिका एव इति।

# प्रवङ्गोत्तरायणपरीक्षाः

EXAMINATIONS OF MARCH 1968.



उत्तरायणपरीक्षाः मार्चमासे 9, 10, 11 तिथिषु प्रचलिष्यन्ति । तदर्थं च आवेदनपत्राणि 20—1—68 दिनात्पूर्वं विना विलम्बशुल्कं, विलम्बशुल्केन साकं च 31—1—68 पर्यन्तं च प्रेषयितुं शक्यन्ते । पूरणीयानि आवेदन-पत्राणि च सभायां निश्शुल्कं लभ्येरन् । परिचयाभिज्ञविचक्षणपाठ्यपुस्तकानि सर्वाणि, समर्थपाठ्यानि च कतिचन सभायां लभ्येरन् ।

परीक्षाशुल्कम् –

| | | | |
|---|---|---|---|
| परिचयः | रू. 1–50 | समर्थः पूर्णः | रू. 6–00 |
| अभिज्ञः | रू 3–00 | " एकैक भागस्य | 3–00 |
| विचक्षणः | रू. 4–00 | कोविदः पूर्णः | रू 15-00 |
| | | एकैक भागस्य | रू. 5–00 |

विलम्बशुल्कम् – अर्धरूप्यकमात्रम्

सं. भा. प्र. सभा, चित्तूरु,
15—11—1967.

की० श्रीनिवासाचार्यः,
परीक्षामन्त्री.



# सुक्तकानि

**अनुवादकः – विद्वान् माचिराजु० शिवरामराजुः**



१. श्लोकार्धे पुण्यरूपाणि विष्णोर्वक्ष्यामि वै दश ।
वनेचरचतुष्कं नृपञ्चकं चैकमाश्विकम् ॥ ”

( वनेचरचतुष्कम् = मत्स्यकूर्मवराहनारसिंहरूपाणि, नृपञ्चकम् = रामपरशुरामबलरामकृष्णवामनरूपाणि, आश्विकम = अश्वारूढः कलिरिति ।

२. शिवस्य पर्वते वासः आकाशे रविचन्द्रयोः ।
विष्णोश्च शयनं शेषे मन्ये मत्कुणबाधया ॥

३. असोढ्वा रजकक्लेशं हरिः पीताम्बरोऽभवत ।
गजचर्मधरः शम्भुः भैरवश्च दिगम्बरः ॥



# सहृदयेषु अभ्यर्थना

संस्कृतप्रेमिणः संस्कृतिरक्षणाभिलाषिणस्सहृदयाः !

इयं च गैर्वाणी पञ्चभिर्वर्षैः मन्दं मन्दं पदमादधाना भारतदेशे सर्वत्र सभासु संस्थासु ग्रन्थालयेषु पाठशालासु विदुषां करेषु अभिमानिनां गृहेषु च विहरतीति सुविदितमेव भवतां । छन्ददातॄणां अत्यल्पत्वेपि व्ययस्य बाहुल्येपि यथाकथंचित् इयं सेवते बहून् प्रियसंस्कृतान् निरतम् । एवमेव अविरतव्यये सभा अशक्ता निरुत्सुका किंकर्तव्यतामूढा च वर्तते ।

पञ्चशतसंख्याकानां वा छन्दप्रदानां लाभे चेयं स्वयं पोषिता भविष्यति । इदानीं च एकशतशून्या एव ते वर्तन्ते । पत्रिका च सहृदयमनःप्रसादनाय विना छन्दमेव प्रेष्यते सर्वेभ्यः । केचनैव द्रुतहृदयाः स्वच्छन्दं स्वच्छन्दमर्पयन्ति । अन्ये च तूष्णीमासते । केचन स्वेषां एतद्भाषाया अज्ञानं निरूप्य पत्रिकाया अनागम वांछन्ति । एवं च सकलैः प्रकारैः एतस्याः आर्थिकसंकटस्समुपस्थितो भवति ।

अतः प्रार्थये यावच्छक्यं सर्वानपि सहकर्तुम् । विविधसंस्थानानांकृते धनिनां सामान्यानां च कृते वार्षिकं चतूरूप्यकं धनं न भारकारि भवति । तदेव बहुभि· र्दीयमानं पत्रिकायै जीवनरक्षकं च भवति । अतः सम्यगालोच्य संस्कृताभिज्ञास्तदन-भिज्ञा वा तदभिमानिनस्सर्वेपि छन्दप्रदानेन पोषयन्तु एतां, एतत्क्रियमाणां च सेवां अविच्छिन्नामङ्गीकुर्वन्त्विति प्रार्थये ॥

इति विनीतः,

तिः कं० तिरुवेङ्कटाचार्यः,

प्रधानमन्त्री.



आन्ध्रप्रदेशसर्वकारेणानुमोदिता R. C No. 27-A /65 Date 14—7—65

R. N. 8145/60. Postal R. No. R. H. 493

वार्षिकम् रू. ४-००

# प्रहेलिका



चक्रे तच्छत्रुमित्रे, पुरजयसमये स्यन्दनस्तत्पदाङ्क-
द्वैतीयीकांबुजाक्षी, शरधिरपि स, गौस्तत्प्रजाताधिनाथः ।
कांडास्तज्जातजाताननकुहरचराः ज्या च तन्मस्तचक्री
यस्याभूत्सोवतान्नश्शिशिरकरकळोल्लासमौलिर्महेशः ॥

अर्थः – यस्य शिवस्य । पुरजयसमये = त्रिपुरसंहारसमये । चक्रे = रथचक्रे । तच्छत्रुमित्रे = तस्य चक्रस्य चक्रवाकस्य, शत्रुः चन्द्रः, मित्रं सूर्यश्च अभूताम् । स्यन्दनः = रथः । तत्पदांकद्वैतीयीकांबुजाक्षी = रथांगधारिणः विष्णोः द्वितीया भार्या भूमिः आसीत । शरधिरपि = इषुधिरपि, सः = शरधिरेव समुद्र एव आसीत । गौः = बाणः । तत्प्रजाताधिनाथः = शरधिजातायाः लक्ष्याः पति, आसीत् । कांडाः = अश्वाः । तज्जात....चराः = काण्डजातं जलजातं कमलंः तज्जातः ब्रह्मा, तस्य वक्त्रगुहाचराः वेदा आसन । ज्या च = मौर्वी च । तन्मस्तचक्री = तस्य शिवस्यैव मस्तके विद्यमानः सर्पः वासुकिः आसीत् । सः = तादृशः । शिशिरकरकलोल्लासमौलिः = चन्द्रशेखरः । महेशः = ईश्वरः । अवतात् = अस्मान् पायात ।



---

Published by Sri N. Ramanatha Iyer, B. A., B L, Advocate & Secretary S. B. P. Sabha, Chittoor, (A. P.)
Printed by Sri T. K. Thiruvengadacharya at Vijaya Press, Chittoor. (A. P.) C. 1500.